# संस्कृत-वार्ताः

दिनाङ्कः 11-**12**-2020

प्रातः - **06: 55**

मुख्य-वार्ताः

- प्रधानमन्त्री नरेन्द्र मोदी ह्य: नव –दिल्ल्याम् नूतन-संसद्-भवनस्य शिलान्यासं न्यस्तवान्। श्रीमोदिना स्पष्टीकृतं यत् नूतनं संसद् भवनमिदं एतत् शताब्दीकस्य भारतस्य आकांक्षापूरकं स्थानं भविता।
- केन्द्रीय कृषि मन्त्रिणा नरेन्द्र सिंह तोमरेण पुनरेकवारं स्पष्टीकृतं यत् कृषि-विधयः कृषकाणां हिताय वर्तन्ते। मोदी प्रशासने कृषकहितं महत्वपूर्णासु प्राथमिकतासु अन्यतमं वर्तते।
- कोरोना संक्रमणः-प्रतिरोधी-वीराणां प्रशासनस्य च प्रयासैः कोरोना संक्रमणस्य प्रत्यवाप्तिमितिः सप्त चत्वारि दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् संवृता।
- ऐदं प्राथम्येन केन्द्रशासिते जम्मू-कश्मीरे जनपद-विकास-परिषदः पञ्चम चाक्रिकम् मतदानं ह्यः शान्तिपूर्णरीत्या सम्पन्नम्। पञ्चमे चक्रे एकपञ्चाशत् प्रतिशतं मतदानं अंकितम्।

कोविड ओपनिंग

प्रियाः श्रोतारः, कोविड नाइन्टीन् इति वैश्विक संक्रमणं विरुध्य राष्ट्रं ऐक्यभावनया युध्यते। भवन्तोऽपि संक्रमणं इदं परास्तुं सन्नद्धाः भवन्तु। मुखनासिकाच्छादकं, सामाजिकदौर्यानुपालनं, पाणिपाद-प्रक्षालनञ्च इति उपायत्रयं सर्वदेव-अवधारयन्तु। यतोहि कोरोना प्रतिरोधी-नियमपालनमेव कुशाग्रबुद्धि-परिचायकम्।

पीएम-संसद भवन

प्रधानमन्त्री नरेन्द्रमोदी ह्यः नव दिल्लीस्थ संसद् मार्ग स्थितस्य नूतन-संसद् भवनस्य आधारशिला न्यस्तवान्। विभिन्नैः धर्मगुरुभिः सर्वधर्म प्रार्थनाः कृताः। अवसरेऽस्मिन् श्रीमोदीना प्रत्यपादयत् यत् नूतन संसद् भवनमिदम् अस्य शताब्दीकस्य भारतस्य आकांक्षाः सम्पूरयिष्यते इति। तेन अवादि यत् इदं हि आत्मनिर्भर भारतस्य निर्माणे साक्षी भविता। श्रीमोदिना अस्य आधारशिलावसरो भारतस्य लोकतान्त्रिक-ऐतिह्ये अभूतपूर्व-पदक्षेपत्वेन प्रख्यापितः।

प्रधानमन्त्रिणा मोदिना प्रत्यपादि यत् न खलु असौ तत्क्षणे विस्मरिष्यते यदा अस्य शताबदस्य चतुर्दशे वर्षे प्रथमवारं संसद् भवनं प्रविष्टुं साष्टाङ्गप्रणामपूर्वकं नतमस्तको जातः। आधुनिक प्रौद्यौगिक्या संवलितं संसद् भवनं इदम् संसद् सदस्यानां कौशलं नूनं वर्धिष्यते। श्रीमोदी प्रत्यपादयत् यत् भारतीयं लोकतंत्र शताब्दिषु प्राप्तानुभवद्वारा विकसितं अस्ति।

मोदी-उज्बेकिस्तान

भारतस्य प्रधानमन्त्री श्रीनरेन्द्र मोदी उजबेकिस्तानस्य राष्ट्रपति शौकत मीरजीयोयेव इत्यमुना सह दृश्य-श्रव्य अन्तर्जालीय माध्यमेन द्विपाक्षिकं सम्भाषणं करिष्यति। इदं दृश्य-श्रव्य अन्तर्जालीय सम्भाषणं भारतं केन्द्रीय-एशियन देशं च अन्तरा प्रथमो भविष्यति।

इदं संस्कृत वार्ता प्रसारणम् आकाशवाणीतः प्रसार्यते। दैशिकीः वैदेशिकीश्च प्रत्यग्रवार्ताः ज्ञातुं नुदन्तु **news on air** इति अस्माकम् अन्तर्जालीय वेबफलकम्।

तोमर किसान

केन्द्रीय-कृषि-मन्त्री नरेन्द्र सिंह तोमरः पुनरेकवारं कृषक-संघटनानि समाश्वासयत् यत् अभिनव-कृषि परिष्काराः कृषकहितं आलक्ष्य विहिताः सन्ति। नवदिल्ल्यां वार्ताहर-सम्मेलनं सम्बोधयता श्री तोमरो ह्यः अवदीत् यत् प्रशासनं कृषकाणां बन्धनं अपाकृत्य यथेच्छं विक्रयण-सौविध्यम् उपपादयति इति। तेन स्पष्टीकृतं यत् यत्र कृषकाणां विप्रतिपत्तिः वर्तते तद्विषयं प्रशासनं मुक्तकण्ठेन चर्चयितुं सन्नद्धम् अस्ति। कृषिमन्त्रिणा कृषकाः समाश्वासिताः यत् तेषां भूमिषु उद्योगपतिनः कथंकारमपि अवैध-नियन्त्रणं नैव विधास्यन्ते। तेन स्पष्टीकृतं प्रशासनेन एतद् विधिषु तादृशानि प्रावधानानि सम्मिलितानि यद्धि कृषकं-प्रसंस्करण संस्थाः च अन्तरा साहमत्यं विवर्धयति।

कोविड

विगते अहोरात्रे द्वाविंशत्यधिक पञ्चशताधिक एकत्रिंशत् सहस्रं नूतनप्रकरणानि पञ्जीकृतानि। अत्रान्तरे संक्रमितजनानां संख्या विवर्ध्य द्विसप्तत्यधिक-त्रि शताधिक सप्तषष्ठी सहस्राधिक सप्त नवति लक्षं यावत् संवृता। स्वास्थ्यमन्त्रालयेणोक्तं यत् गत चतुर्विंशति होरासु द्वादशाधिक चतुर् शतं जनाः कालकवलीभूताः। वर्तमानसमये कोरोना इति वैश्विक संक्रमणेन, त्रिनवत्यधिक द्विशताधिक द्विसप्तति सहस्राधिक त्रि लक्षं जनाः संक्रान्ताः। विगते अहोरात्रे पञ्चविंशत्यधिक सप्त शताधिक सप्तत्रिंशत् सहस्रं रोगिणः स्वस्थीभूताः। सममेव आहत्य अस्मात् कारणात् षडाधिक त्रि शताधिक त्रि पञ्चाशत् सहस्राधिक द्विनवति लक्षं रोगिणः स्वस्थीभूताः। देशे संक्रमण-प्रतिरोधी वीराणां प्रयासेन- प्रत्यवाप्तिमितिः सप्त-चत्वारि दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता।

।। इति वार्ताः ।।